श्री

# महालक्ष्मी पूजा पद्धति

खेमराज श्रीकृष्णदास प्रकाशन
बम्बई

# अथ श्रीमहालक्ष्मीपूजापद्धतिः प्रारभ्यते

संस्करण : जुलाई २०१५, सवंत् २०७२

मूल्य : ३० रुपये मात्र ।

मुद्रक एवं प्रकाशक:
खेमराज श्रीकृष्णदास,™
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
मुंबई - ४०० ००४.



Printers & Publishers :
Khemraj Shrikrishnadass,
Prop. Shri Venkateshwar Press,
Khemraj Shrikrishnadass Marg,
7th Khetwadi, Mumbai - 400 004.

Web Site : http://www.khe-shri.com
Email : Khemraj@vsnl.com

Printed by Sanjay Bajaj for M/s. Khemraj Shrikrishnadass, Proprietors Shri Venkateshwar Press, Mumbai - 400 004, at their Shri Venkateshwar Press, 66 Hadapsar Industrial Estate, Pune - 411 013.

श्रीगणेशाय नमः। अथ भाषाभावार्थ। प्रथम आचमन और प्राणायाम करके अंजली बांधकर श्रीगणेशजीको

श्रीगणेशाय नमः। अथ महालक्ष्मीपूजनम्। तत्रादौ आचम्य प्राणानायम्य कृताञ्जलिपुटः श्रीगणेशं प्रणमेत्। ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्ननाशो विनायकः॥ १॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः। द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारम्भे विवाहे च प्रवेशे गमने तथा। सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः। सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥५॥ सर्वमङ्गल माङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ६ ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान्। सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥ ७ ॥ इति गणपतिं प्रणम्य। सङ्कल्पं कुर्यात्–तत्र तावत् दक्षिणहस्ते गन्धपुष्पाक्षतदूर्वाजलान्यादाय। ॐ विष्णुर्विष्णुर्विष्णुः। श्रीमद्भगवतो महापुरुषस्य

प्रणाम करे। 'सुमुखश्चैकदन्तश्च' इत्यादि ७ श्लोकोंको पढके प्रतिज्ञासंकल्प उच्चारण करे अर्थात् पूजा करनेवाला अपने दक्षिण

आरती तथा मंत्रपुष्पांजलि इत्यादि षोडशोपचारों करके श्रीगणपतिको पूजके प्रणाम करे। अथ नवग्रहपूजनम्। अक्षत लेके 



आरार्तिकं स० । मन्त्रपुष्पाञ्जलिं स० । नमस्कारं समर्पयामि ॥ इति षोडशोपचारैः श्रीगणपतिं संपूज्य । हस्ते जलमादाय । ॐ एतत्कृतं यद्गणपतिपूजनं तेन श्रीमहागणपतिः प्रीयता मित्युत्सृजेत् । इति गणपतिपूजनम् ॥ अथ नवग्रहपूजनम् । पुष्पाक्षतान् गृहीत्वा । ॐ आकृष्णेन रजसावर्त्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् । ॐभूर्भुवः स्वः श्रीसूर्य इहागच्छ इह तिष्ठ,इति स्थापयेत् १।ॐइमं देवाऽअसपत्नꣳसुवध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महतेज्यानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यैविशऽएष वोमी राजा सोमोऽस्माकम्ब्राह्मणानाꣳराजा॥ॐभूर्भुवः स्वः चन्द्र इहागच्छ इह तिष्ठ इति स्थापयेत् २ ।



'आकृष्णेन' इस मंत्रसे सूर्यको आवाहन स्थापन करे १, 'इमं देवा' इस मंत्रकरके चन्द्रमाका आवाहन स्थापन करे २,

'अग्निर्मूर्द्धा' इससे मंगलका ३, 'उद्बुध्यस्व' इससे बुधका ४, 'बृहस्पते' इससे बृहस्पतिका ५, 'अन्नात्परि'

ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्याऽअयम्। अपाꣳरेताꣳसिजिन्वति॥ ॐ भूर्भुवः स्वः भौम इहागच्छ इह तिष्ठ, इति स्थापयेत् ३। ॐउद्बुध्यस्वाग्ने प्रतिजागृहित्वमिष्टापूर्ते सꣳसृजेथामयञ्च। अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत। ॐ भूर्भुवः स्वः बुध इहा० ४। ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवसऽऋतप्रजाततदस्मासु द्रविणं धेहि चित्रम्॥ ॐ भूर्भुवः स्वः गुरो इहा०५। ॐ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदं पयोमृतम्मधु॥ ॐ भूर्भुवः स्वः शुक्र इहा०६। ॐ शन्नो देवीरभिष्टयऽआपो भवन्तुपीतये। शंयोरभिस्रवन्तुनः॥ ॐ भूर्भुवः स्वः शनैश्चर इहा०७। ॐकयानश्चित्रऽआभुवदूतीसदावृधः सखा। कयाशचिष्ठयावृता। ॐ भूर्भुवः स्वः राहो इहा० ८। ॐ केतुं कृण्वन्नकेतवे पेशोमर्य्याऽअपेशसे। समुषद्भिरजायथाः॥

इस मंत्रसे शुक्रका ६, "शन्नोदेवी' इस मंत्रसे शनैश्चरका ७ और 'कयानश्चित्र' इस मंत्रसे राहुका ८ तथा 'केतुं

मल
३॥

कृण्वन्' इस मन्त्र करके केतुका आवाहन और स्थापन करे ९। इस प्रकार आवाहन स्थापन करके सूर्यादि ग्रहभ्यो नमः' इस नाममंत्रसे पाद्य अर्घ्य आदि षोडश उपचारोंसे पूजा करे इति। अथ कलशस्थापनम्। प्रथम

५.

ॐ भूर्भुवः स्वः केतो इहागच्छ इह तिष्ठ, इति स्थापयेत् ९। एवमावाहनं स्थापनं च कृत्वा ॐ सूर्यादिग्रहेभ्यो नमः इति नाममन्त्रेण षोडशोपचारैः संपूजयेत्। इति नवग्रहपूजनम्॥ अथ कलशस्थापनम्। तत्रादौ भूरसिभूमिरसीतिभूमिं स्पृष्ट्वा।ॐभूरसि भूमिरस्यदिति रसि विश्वधायाविश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीम्माहिꣳसीः॥१॥ धान्यमसीति यवान् क्षिप्त्वा। ॐधान्यमसि धिनुहि देवान् प्राणाय त्वोदानायत्वा व्यानाय त्वादीर्घामनु प्रसितिमायुषेधां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वामहीनां पयोसि॥२॥ आजिघ्रेति कलशं स्थापयेत्। ॐआजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः। पुनरूर्ज्जा निवर्तस्व सा नः

॥३॥

'भूरसि भूमि' इस मन्त्रसे भूमिका स्पर्श करके १, 'धान्यमसि' इस मन्त्र करके यव (चावल) आदि धान्य गेरे २,

अनन्तर उस धान्यके ऊपर 'आजिघ्रकलशम्' इस मन्त्रकरके कलश स्थापन कर देवे ३, फिर 'वरुणस्योत्तं' इस मन्त्रसे कलशमें जल भरे ४, 'गन्धद्वारां' इससे चंदन ५, और 'या ओषधीः' इससे सर्वौषधी कलशमें डाले ६ 'काण्डात्

सहस्रंधुक्ष्वोरुधारापयस्वती पुनर्म्मा व्विशताद्द्रयिः ॥ ३ ॥ वरुणस्योत्तम्भनमिति जलं पूरयेत् । ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्यस्कंभसर्ज्जनीस्थो व्वरुणस्यऽऋत सदन्न्यसिव्वरुणस्यऽऋतसदन मसि व्वरुणस्यऽऋतसदनमासीद ॥ ४ ॥ ॐ गन्धद्वारां दुराधर्षामिति गन्धं प्रक्षिपेत् ॥ ५ ॥ या ओषधीरिति सर्वौषधीः । ॐ याऽओषधीः पूर्व्वाजाता देवेभ्यस्त्रियुगम्पुरा । मनैनुबभ्रूणामहꣳ शतन्धामानि सप्त च ॥ ६ ॥ काण्डात्काण्डादिति दूर्वाः । ॐकाण्डात्काण्डात्प्ररोहन्ती० ॥ ७ ॥ अश्वत्थेव इति पञ्चपंल्लवान् । ॐ अश्वत्थेवो निषदनम्पर्णेवोव्वसतिष्कृता । गोभाजऽइत्किलासथ यत्सनवथपूरुषम् ॥ ८ ॥ स्याना पृथिवीति सप्त मृदः । ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ।

काण्डात्' इस मंत्र करके दूर्वा ७ और 'अश्वत्थेवो' इससे पीपल बड पलाश आम गूलरके पत्ते कलशमें डाले ८, 'स्योना

पृथिवि' इस मंत्रसे सप्तमृत्तिका डाले ९, ' याः फलिनीः ' इससे पूगीफल डाले १०, ' परिवाजपतिः' इससे पंचरत्न ११, ' हिरण्यगर्भः' इस मंत्रसे सुवर्ण १२, ' वसोः पवित्र' इससे वस्त्र या सूत वेष्टन करे १३ फिर ' पूर्णा

यच्छानः शर्म्म सप्प्रथाः ॥ ९ ॥ ॐ याः फलिनीर्याऽअफला० इति पूगीफलम् ॥ १० ॥ परिवाजपतिरिति पञ्च रत्नानि । ॐपरिवाजपतिः कविरग्निर्हव्व्यान्यक्रमीत् । दधद्रत्नानि दाशुषे॥ ११॥ ॐ हिरण्यगर्भः सम इति हिरण्यम् ॥ १२ ॥ व्वसोः पवित्रमसीति रक्तवस्त्रेण वेष्टयेत् । ॐ व्वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्प्वाकामधुक्षः ॥ १३ ॥ पूर्णादर्व्वीति पूर्णपात्रमुपरि न्यसेत् । ॐ पूर्णादर्व्वि परापत सुपूर्णा पुनरापत । व्वस्नेव विक्रीणावहाऽइषमूर्ज्जꣳ शतक्रतो ॥१४॥ ॐ श्रीश्च ते लक्ष्मीश्च इति नारिकेलं स्थापयेत्॥१५॥ ततः ॐ तत्त्वायामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः॥ अहेडमानो व्वरुणेह बोध्युरुशꣳस मा न आयुः प्प्रमोषीः॥ ॐ वरुणं साङ्गं सपरिवारमावाहयामि । इत्यावाह्य ।

दर्व्वि' इससे पूर्णपात्र रखके ' श्रीश्चते' इस मंत्रसे नारियल कलशके ऊपर स्थापन करे १४ और ' तत्त्वायामि '

इस मंत्रकरके वरुणका आवाहन करे फिर गंध पुष्प आदि षोडशोपचारसे पूजके, 'सर्वे समुद्रः' इस मंत्रसे गंगादि

ॐ मनोजूतिर्जुषतामिति प्रतिष्ठाप्य । ॐ अपांपतिवरुणाय नमः इति मन्त्रेण षोडशोपचारैः सम्पूजयेत् ॥ ततो गङ्गाद्यावाहनम् । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ १ ॥ ततः कलशाभिमन्त्रणम् ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ १ ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ २ ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः । प्रार्थना–देवदानवसंवादे मथ्यमाने महोदधौ ॥३॥ उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् । त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ॥४॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः । शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥५॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥ ६ ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमिच्छे

तीर्थोंका आवाहन करे । पश्चात् 'कलशस्य मुखे विष्णुः' इत्यादि ३ श्लोकोंकरके कलशको अभिमंत्रण अर्थात् स्पर्श

करे और ' देवदानवसंवादे' इत्यादि श्लोकोकरके प्रार्थना करे ॥ इति कलशपूजनम् । अनंतर ब्राह्मणोंके रक्षाबंधन तिलक आदि करके खुद यजमानभी रक्षा बंधावे और तिलक आशीष धारण करे ॥ अथ महालक्ष्मीपूजनम् । प्रथम तो

जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ ७ ॥ इति कलशपूजनम् ॥ ततो ब्राह्मण पूजनं रक्षाबन्धन च कुर्यात् ॥ अथ महालक्ष्मीपूजनम् ॥ तत्रादौ ध्यानम् । या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी गम्भीरावर्त्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरायी । या लक्ष्मीर्दिव्य रूपा मणिगणखचितैः स्नापिता हेमकुम्भैः सा नित्यं पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥ १ ॥ इति ध्यात्वा । ॐ सर्वलोकस्य जननीं शूलहस्तां त्रिलोचनाम् । सर्वदेवमयीमीशां देवीमावाहया म्यहम् ॥ २ ॥ ॐ महालक्ष्म्यै नमः आवाहनं समर्पयामि इत्यावाहनम् । ॐ तप्तकाञ्चनवर्णाभं मुक्तामणिविराजितम् । अमलं कमलं दिव्यमासनं प्रतिगृह्यताम् ॥ ३ ॥ इत्यासनम् । ( लाजाश्च कुङ्कुमाश्चैव तण्डुलाः पुष्पमेव च सर्वौषधिसमायुक्तं पञ्चाङ्गं पादमुच्यते ॥ ) ॐ गङ्गादितीर्थसंभूतं

लक्ष्मी.का ' या सा पद्मा'इस श्लोकको पढ़के ध्यान करे १।अनंतर सर्वलोकस्य' इस मंत्रसे आवाहन करे२।और 'तप्तकांचन'

इस मंत्रको पढ़के आसन देवे ३। फिर लाजा ( खील ) कुंकुम, चावल, पुष्प, सर्वौषधी, जल इत्यादि सामग्री पहित पाद्यपात्र लेके ' गंगादितीर्थ' इस मंत्रसे पाद्यदान करे ४। अनंतर चंदन, अगर, कस्तूरी लाल चंदन, कुंकुम

गन्धपुष्पाक्षतैर्युतम् । पाद्यं ददाम्यहं देवि गृहाणाशु नमोऽस्तु ते ॥ ४ ॥ इति पाद्यम् । ( चन्दनागरुकस्तूरीरक्तचन्दनचन्द्रिकाः । कुङ्कुमं सुरदारुश्च अष्टगन्धं प्रकीर्त्तितम्॥ ) अष्टगन्धसमायुक्तं स्वर्णपात्रप्रपूरितम् । अर्घ्यं गृहाण मद्दत्तं महालक्ष्म्यै नमोऽस्तु ते ॥५ ॥ इत्यर्घ्यम् । ॐ सर्वलोकस्य या शक्तिर्ब्रह्मविष्ण्वादिभिः स्तुता । ददाम्याचमनं तस्यै महाकाल्यै मनोहरम् ॥ ६ ॥ इत्याचमनम् । ॐ पञ्चामृतसमायुक्तं जाह्नवीसलिलं शुभम् । गृहाण विश्वजननि स्नानार्थं भक्तवत्सले ॥७ ॥ इति स्नानम् । ॐ दिव्याम्बरं नूतनं हि क्षौमं त्वतिमनोहरम् । दीयमानं मया देवि गृहाण जगदम्बिके॥८॥ इति वस्त्रयुगम् । कापिलं दधि कुन्देन्दुधवलं मधुसंयुतम्।स्वर्णपात्रस्थितं देवि मधुपर्कं गृहाण भोः॥९॥

तथा देवदारु इत्यादि अष्टगंधसहित अर्घपात्र लेके ' अष्टगंधसमायुक्तं० इस मंत्रसे अर्घ देवे ५, ' सर्व लोकस्य ' इस मंत्रसे आचमन करावे६। और ' पंचामृतसमायुक्तं' इससे पंचामृतका स्नान और शुद्ध जलसे स्नान करावे७, फिर ' दिव्यां

बरं' इस मंत्रसे युग्मवस्त्र अर्पण करे ८। पश्चात् 'कापिलं' इस मंत्रसे मधुपर्क देके ९। 'रत्नकंकण' इससे आभरण ( गहिना ) अर्पण करे १०। और 'श्रीखंडागरु' इस मंत्रसे चंदनः ११। 'रक्तचंदन' इससे लाल

इति मधुपर्कम् । ॐ रत्नकङ्कणवैदूर्यमुक्ताहारादिकानि च । सुप्रसन्नेन मनसा दत्तानि स्वीकुरुष्व भोः ॥ १० ॥ इत्याभरणानि । श्रीखण्डागरुकर्पूरमृगनाभिसमन्वितम् । विलेपनं गृहाणाशु नमोऽस्तु भक्तवत्सले ॥११॥ इति चन्दनम् । ॐ रक्तचन्दनसंमिश्रं पारिजातसमुद्भवम् । मया दत्तं गृहाणाशु चन्दनं गन्धसंयुतम् ॥ १२ ॥ इति रक्तचन्दनम् । ॐ सिन्दूरं रक्तवर्णं च सिन्दूर तिलकप्रिये । भक्त्या दत्तं मया देवि सिन्दूरं प्रतिगृह्यताम्॥१३॥इति सिन्दूरम् । ॐ कुङ्कुमं कामदं दिव्यं कुङ्कुमं कामरूपिणम् । अखण्डकामसौभाग्यं कुङ्कुमं प्रतिगृह्यताम् ॥ १४ ॥ इति कुङ्कुमम् । ॐ तैलानि च सुगन्धीनि द्रव्याणि विविधानि च । मया दत्तानि लेपार्थं गृहाण परमेश्वरि ॥१५॥ इति सुगन्धितैलम् । ॐ मन्दारपारिजातादीन् पाटलीं केतकीं तथा । मरुवामोगरं चैव गृहाणाशु

चन्दन लक्ष्मीजीके अर्पण करे १२। फिर 'सिंदूरं रक्तवर्णं च' इस मंत्रसे सिंदूर १३। और 'कुंकुमं कामदं' इस मंत्रसे रोली ( केशर ) अर्पण करे १४ 'तैलानि च' इस मंत्रसे अतर ( सुगंधी तैल ) चढ़ावे १५ 'मंदार' इस मंत्रसे

पुष्प अर्पण करे १६, 'विष्ण्वादिसर्वदेवानां' इस मंत्रसे दूर्वा १७ और 'पद्मशंख' इस मंत्रकरके पुष्पोंकी माला अर्पण करे १८। अथ अंगपूजा। 'चपलायै०, इससे पैरोंकी १ और 'चंचलायै' इससे गोडोंकी पूजा करे २,

नमोऽस्तु ते ॥ १६ ॥ इति पुष्पाणि। ॐ विष्ण्वादिसर्वदेवानां प्रियां सर्वसुशोभनाम्। क्षीरसागर संभूते दूर्वां स्वीकुरु सर्वदा ॥ १७ ॥ इति दूर्वाः। ॐ पद्मशङ्खजपापुष्पैः शतपत्रैर्विचित्रिताम्। पुष्पमालां प्रयच्छामि गृहाण त्वं सुरेश्वरि ॥ १८ ॥ इति पुष्पमालाम् ॥ अथाङ्गपूजा। ॐ चपलायै नमः पादौ पूजयामि १। ॐ चञ्चलायै नमः जानुनी पूजयामि २। ॐ कमलायै नमः कटिं पू० ३। ॐ कात्यायन्यै० नाभिं पू० ४। ॐ जगन्मात्रे नमः जठरं पू० ५। ॐ विश्ववल्ल भायै नमः वक्षस्स्थलं पू० ६। ॐ कमलवासिन्यै नमः नेत्रत्रयं पू० ७। ॐ श्रियै नमः शिरः पूजयामि ८। इत्यङ्गपूजा। अथ पूर्वादिक्रमेणाष्टदिक्ष्वष्टसिद्धीः पूजयेत्। ॐ अणिम्ने नमः १।

कमलायै' इससे कटिभागकी ३ और 'कात्यायन्यै' इससे नाभिकी पूजा करे ४, 'जगन्मात्रे' इससे पेटकी ५ और 'विश्ववल्लभायै०, इस मंत्रसे छातीकी ६, 'कमलवासिन्यै' इससे नेत्रोंकी पूजा करे ७। फिर 'श्रियै नमः' इस

मंत्रसे शिरकी पूजा करे ८, अष्टसिद्धियोंका पूजन कर ' आद्यलक्ष्म्यै ' इत्यादि नामोंसे आठ लक्ष्मियोंको पूजे, अनंतर

ॐ महिम्ने नमः २। ॐ गरिम्णे नमः ३। ॐ लघिम्ने नमः ४। ॐ प्राप्त्यै नमः ५। ॐ प्राकाम्याय नमः ६। ॐ ईशितायै नमः ७। ॐ वशितायै नमः ८। अथ पूर्वादिक्रमेणाष्टलक्ष्मीपूजनम् । ॐ आद्यलक्ष्म्यै नमः १। ॐ विद्यालक्ष्म्यै नमः २। ॐ सौभाग्यलक्ष्म्यै नमः ३। ॐ अमृतलक्ष्म्यै नमः ४। ॐ कामलक्ष्म्यै नमः ५। ॐ सत्यलक्ष्म्यै नमः ६। ॐ भोगलक्ष्म्यै नमः ७ ॐ योगलक्ष्म्यै नमः ८। इति। ॐ वनस्पतिरसोत्पन्नो गन्धाढ्यः सुमनोहरः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रति गृह्यताम् ॥१९॥ इति धूपम् । ॐ कर्पूरवर्तिसंयुक्तं घृतयुक्तं मनोहरम् । तमोनाशकरं दीपं गृहाण परमेश्वरि ॥ २० ॥ इति दीपम् । ॐ नैवेद्यं गृह्यतां देवि भक्ष्यभोज्यसमन्वितम् । षड्रसैरन्वितं दिव्यं लक्ष्मि देवि नमोऽस्तु ते ॥ २१ ॥ इति नैवेद्यम्

'वन०' यह मंत्र पढके धूप देवे १९, 'कर्पूरवर्ति' इस मंत्रसे दीपक दिखावे २०, ' नैवेद्यं' इस मंत्रसे नैवेद्य समर्पण करे२१

'शीतलं निर्मलं' इस मंत्रकरके आचमन करावे फिर 'एलालवंग' इस मंत्रसे तांबूल० २३ 'हिरण्य गर्भ' इससे दक्षिणा अर्पण करे २४ 'चक्षुर्दं' इस मंत्रसे नीराजन २५ और 'फलेन फलितं' इससे ऋतुफल० २६

शीतलं निर्मलं तोयं कर्पूरेण सुवासितम् । आचम्यतां मम जलं प्रसीद त्वं महेश्वरि ॥ २२ ॥ इत्याचमनम् । ॐ एलालवङ्गकर्पूरनागपत्रादिभिर्युतम् । पूगीफलेन संयुक्तं ताम्बूलं प्रतिगृह्य ताम् ॥ २३ ॥ इति ताम्बूलम् । ॐ फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् । तस्मात्फलप्रदानेन पूर्णाः सन्तु मनोरथाः ॥ २४ ॥ इति फलम् । ॐ हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ २५ ॥ इति दक्षिणाम् । चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि ॥२६॥ इति नीराजनम् । ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च। तानि तानि विनश्यन्ति प्रदक्षिणपदेपदे ॥ २७ ॥ इति प्रदक्षिणा । ॐ केतकीजातिकुसुमैर्मल्लिकामालतीभवैः । पुष्पाञ्जलिर्मया दत्तस्तव प्रीत्यै नमोऽस्तु ते ॥ २८ ॥ इति मन्त्रपुष्पाञ्जलिम् । ॐ सुरासुरेन्द्रादिकिरीटमौक्तिकैर्युक्तं सदा यत्तव पादकञ्जनम् । परावरं

यानि कानि' इससे प्रदक्षिणा करे २७ और 'केतकीजाति' इस मंत्रसे पुष्पांजलि २८ 'सुरासुरेन्द्रा' इत्यादि तीन

श्लोकों ( २९ । ३० । ३१ ) करके प्रार्थना करे । अथ मषीपात्र ( दवात ) पूजनम् । तत्रादौ ध्यानम् । प्रथम



पातु वरं सुमङ्गलं नमामि भक्त्या तव कामसिद्धये॥२९॥ भवानि त्वं महालक्ष्मि सर्वकामप्रदायिनी। सुपूजिता प्रसन्ना स्यान्महालक्ष्म्यै नमोऽस्तु ते ॥ ३० ॥ नमस्ते सर्वदेवानां वरदासि हरिप्रिये । या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥ ३१ ॥ इति प्रार्थना ॥ अथ मषीपात्र ( दवात ) पूजनम् । तत्रादौ ध्यानम् । सद्यश्छिन्नशिरःकृपाणमभयं हस्तैर्वरं बिभ्रतीं घोरास्यां शिरसा स्रजं सुरुचिरामुन्मुक्तकेशावलिम् । सृक्काऽसृक्प्रवहां श्मशाननिलयां श्रुत्योः शवालंकृतिं श्यामाङ्गीं कृत मेखलां शवकरैर्देवीं भजे कालिकाम् ॥ १ ॥ ॐ महाकाल्यै नमः । मषि त्वं लेखनीयुक्ता चित्र गुप्तशयस्थिता । सदक्षराणां पत्रे च लेख्यं कुरु सदा मम ॥ २ ॥ या माया प्रकृतिः शक्तिश्चण्डमुण्ड विमर्दिनी । सा पूज्या सर्वदेवैश्च ह्यस्माकं वरदा भव ॥ ३ ॥ ॐ जातवेदसे सुनवामसोममरातीयतो निदहातिवेदः । सनः पर्षदतिदुर्गाणि विश्वा नेवसिन्धुन्दुरितात्यग्निः ॥१॥ ॐ महाकालि इहागच्छ



सद्यश्छिन्न' इस मंत्रको पढके ध्यान करे अनंतर ' माषि त्वं ' इत्यादि ३ मंत्रोंसे कालीका आवाहन करे ।

पश्चात् गंधादिकोंसे पूजा करके 'काल्यै नमः' इत्यादि १३ नाम मंत्रोंसे आवरणपूजा करे। पूजा करनेके अनंतर 'या कालिका'

इह तिष्ठ इत्यावाह्य ॐ महाकाल्यै नमः । इति षोडशोपचारैः पूजयेत् । तत आवरणपूजा । ॐ काल्यै नमः १ । ॐ कपालिन्यै नमः २ । ॐ फुल्लायै नमः ३ । ॐ कुरुकुल्लायै नमः ४ । ॐ विरोधिन्यै नमः ५ । ॐ विप्रचित्तायै नमः ६ । ॐ उग्रपददत्तायै नमः ७ । ॐ दिव्यायै नमः ८ । ॐ नीलायै नमः ९। ॐ घनायै नमः १०। ॐ बलाकायै नमः ११। ॐ मात्रायै नमः १२। ॐ मुद्रायै नमः १३ । एतैर्नाममन्त्रैर्गन्धादिपूजां कृत्वा । या कालिका रोगहरा सुवन्द्या वैश्यानुकूलैर्मदनातुरैश्च । जनैर्जनानां भयहारिणी च सा देवमाता मयि सौख्यदात्री ॥१॥ इति मन्त्रपुष्पाञ्जलिं समर्पयेत् ॥ अथ लेखनीपूजा । तत्रादौ ध्यानम् । शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् । हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ १ ॥ इति ध्यात्वा । कृष्णानने द्विजिह्वे च चित्र

इस मंत्रसे पुष्पांजलि अर्पण करे। अथ लेखनीपूजा। 'शुक्लांब्रह्म' इस श्लोकको पढ़के श्रीसरस्वतीका ध्यान करे और

'कृष्णानने' इन २ मंत्रोंसे षोडशोपचार पूजा करे पश्चात् 'वाचित्त्यै' इत्यादि १० नाममंत्रों करके आवरणपूजा करे और

गुप्तकरस्थिते । सदक्षराणां पत्रे च लेख्यं कुरु सदा मम ॥ २ ॥ ॐ प्रणोदेवीसरस्वती वाजेभि र्वाजिनीवती । यज्ञं वष्टुधियावसुः ॥ ३ ॥ ॐ वीणापुस्तकधारिण्यै नमः । इति मन्त्रेण षोडशोप चारैः सम्पूज्यावरणपूजां कुर्यात् । ॐ वाचित्त्यै नमः १ । ॐ वाग्वादिन्यै नमः २ । ॐ अजि तायै नमः ३ । ॐ विष्णुमायायै नमः ४ । ॐ हिङ्गुलायै नमः ५ । ॐ यज्ञविद्यायै नमः ६ । ॐ सिद्धविद्यायै नमः ७ । ॐ प्रज्ञायै नमः ८ । ॐ पद्मावत्यै नमः ९ । ॐ भुवनेश्वर्यै नमः १० ॥ अथ नामपूजा । लेखन्यै नमः । सरस्वत्यै नमः । ब्रह्माण्यै नमः । भारत्यै नमः । गिरे नमः । वाचे नमः । वाण्यै नमः । हंसगमनायै नमः । पद्महस्तायै नमः । शारदायै नमः । इति गन्धादिपूजां कृत्वा । कृष्णानने कृष्णजिह्वे चित्रगुप्तशयस्थिते । पुष्पाञ्जलिं गृहाण त्वं सदैव वरदा भव ॥ १ ॥ इति पुष्पाञ्जलिं दद्यात् । अथ प्रार्थना । या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता या वीणावर

'लेखन्यै' इत्यादि नामोंसे पूजा करके 'कृष्णानने' इस मंत्रसे पुष्पांजलि दान करे फिर 'या कुंदेंदु' इस मंत्रसे प्रार्थना करे।

अथ द्रव्यनिधिस्थाने कुबेरपूजनम् । 'कुबेराय नमः' इस नाममंत्रसे कुबेरका आवाहन स्थापन करके षोडशोपचारसे

दण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ १ ॥ तरुणशकलमिन्दोर्बिभ्रती शुभ्रकान्तिः कुचभरनमिताङ्गी सन्निषण्णा सिताब्जे । निजकरकमलोद्यल्लेखनीपुस्तकश्रीः सकलविभवसिद्ध्यै पातु वाग्देवता नः॥ २॥ अथ द्रव्यनिधिस्थाने कुबेरपूजनम् । ॐ कुबेराय नमः कुबेरमावाहयामि स्थापयामि इत्यावाह्य षोडशोपचारैः सम्पूज्य । ॐ धनदाय नमस्तुभ्यं निधिपद्माधिपाय च । भवन्तु त्वत्प्रसादान्मे धनधान्यादिसम्पदः ॥ १ ॥ इति प्रार्थयेत् ॥ अथ तुलापूजनम् । नमस्ते सर्वदेवानां शक्तिस्त्वे सत्यमाश्रिता । साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना ॥१॥ ॐ तुलायै नमः । तुलामावाहयामि स्थापयामि इत्यावाह्य गन्धादिभिः सम्पूजयेत् ॥ अथ दीपपूजनम् । भो दीप त्वं ब्रह्मरूप अन्धकार

पूजा करे फिर, 'धनदाय' इस मंत्रसे प्रार्थना करे ॥ अथ तुला ( तारवडी ) पूजा । 'नमस्ते सर्वदेवानां' इस मंत्रसे तुलाका आवाहन स्थापन करके षोडशोपचारसे पूजा करे । अथ दीपपूजनम् । 'भो दीप त्वं' इस मंत्रसे

गंध, अक्षत, पुष्प आदिसे दीपककी पूजा करके महालक्ष्मीको निवेदन कर देवे। अनंतर 'दीपावलि' इत्यादि २ मंत्रोंसे

निवारक। इमां मया कृतां पूजां गृहंस्तेजः प्रवर्धय ॥ १ ॥ ॐ दीपाय नमः इति गन्धाक्षतपुष्पैः सम्पूज्य श्रीमहालक्ष्म्यै निवेदयेत्। ततः—दीपावलिं मया दत्तां गृहाण त्वं सुरेश्वरि। आरार्तिकप्रदानेन ज्ञानदृष्टिप्रदा भव ॥ १॥अग्निज्योती रविज्योतिश्चन्द्रज्योतिस्तथैव च। उत्तमः सर्वतेजस्तु दीपोऽयं प्रतिगृह्यताम् ॥ २ ॥ इत्यारार्तिकम्। प्रदक्षिणां च कृत्वा। ॐ पुष्पाञ्जलिं गृहाण त्वं पादाम्बुजयुगार्पितम्। मया भक्त्या सुमनसा प्रसीद परमेश्वरि ॥३॥ इति पुष्पाञ्जलिं दद्यात्। अथ प्रार्थना। नमस्ते सर्वदेवानां वरदासि हरिप्रिये। या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥ १ ॥ विश्वरूपस्य भार्यासि पद्मे पद्मालये शुभे। महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे ॥२॥ वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम्। सुखरात्रिः प्रभातेऽद्य तन्मेऽलक्ष्मीं व्यपोहतु ॥ ३ ॥ या रात्रिः सर्वभूतानां या च देवेष्ववस्थिता। संवत्सरप्रिया या च सा ममास्तु सुमङ्गला ॥४॥ माता त्वं सर्वभूतानां देवानां सृष्टिसंभवा। आख्याता भूतले देवि सुखरात्रि नमोऽस्तु ते ॥५॥ दामोदरि नमस्तेऽस्तु

आरती करके प्रदक्षिणा करे। पश्चात् 'पुष्पांजलिं' इस मंत्रसे पुष्पांजलि देके 'नमस्ते सर्वदेवानां' इत्यादि

११मंत्रोंसे प्रार्थना करे॥पश्चात् ब्राह्मणोंको दक्षिणा देके आशीर्वाद लेवे और 'यान्तु देव' इस मंत्रसे देवोंका विसर्जन करे।

नमस्त्रैलोक्यमातृके। नमस्तेऽस्तु महालक्ष्मि त्राहि मां परमेश्वरि ॥ ६ ॥ शंखचक्रगदाहस्ते शुभ्रवर्णे शुभानने। मम दृष्ट्वा वरं देहि सर्वसिद्धिप्रदायिनि ॥७॥ नमस्तेऽस्तु महालक्ष्मि महासौख्यप्रदायिनि। सर्वदा देहि मे द्रव्यं दानाय भुक्तिहेतवे ॥८॥ धनं धान्यं धरां हर्षं कीर्तिमायुर्यशः श्रियः। तुरगान् दन्तिनः पुत्रान्महालक्ष्मि प्रयच्छ मे ॥९॥ यन्मया वाञ्छितं देवि तत्सर्वं सफलं कुरु। न बाधन्तां कुकर्माणि सङ्कटान्मे निवारय॥१०॥न्यूनं वाप्यतुलं वापि यन्मया मोहितं कृतम्। सर्वं तदस्तु संपूर्णं त्वत्प्रसादान्महेश्वरि ॥११॥ इति प्रार्थना। ततो विप्रेभ्यो दक्षिणादानम्। तद्द्वारा आशीर्वाचनं कार्यम्। ॐ श्रीमहालक्ष्मीपूजनविधेर्यन्न्यूनमतिरिक्तं तत्सर्वं ब्राह्मणानां वचनात् श्रीगणपति प्रसादात् सम्पूर्णमस्तु। इति पठित्वा अक्षतानादाय ॐ यान्तु देवगणाः सर्वे पूजामादाय मामकीम्। इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥ १ ॥ इति देवान् विसृजेत् ॥ इति श्रीमहालक्ष्मी पूजनम् ॥

इति श्रीमहालक्ष्मीपूजनं भाषाटीकासहितं समाप्तम् ॥

म. ल.

॥११॥

अथ श्रीसूक्तप्रारम्भः। ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जात
वेदो म आवह ॥१॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं
पुरुषानहम् ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्। श्रियं देवीमुपह्वये श्रीर्मादेवी
जुषताम् ॥३॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां
तामिहोपह्वये श्रियम् ॥ ४ ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्।
तां पद्मनेमीं शरणमहं प्रपद्येऽअलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥ आदित्यवर्णे तपसोधिजातो
वनस्पतिस्तव वृक्षोथ बिल्वः। तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्याऽअलक्ष्मीः ॥६॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥७॥
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वान्निर्णुद मे गृहात् ॥८॥
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥

पू.

॥११॥

मनसः काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥
कर्दमेन प्रजाभूता मयि संभव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥ आपः
सृजन्तु स्निग्धा नि चिक्लीत वस मे गृहे । नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥ आर्द्रां
पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १३ ॥
आर्द्रां यष्करिणीं यष्टिं सुवर्णां हेममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं
पुरुषानहम् ॥ १५ ॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । श्रियः पञ्चदशर्चंञ्च
श्रीकामः सततं जपेत् ॥ १६ ॥ इति श्रीसूक्तं समाप्तम् ॥

## अथ श्रीलक्ष्मीजीकी आरती प्रारम्भ ।

जय लक्ष्मी माता जय लक्ष्मीमाता । तुमकूं निशिदिन सेवत हर विष्णू धाता ॥ टेर ॥
ब्रह्माणी रुद्राणी कमला तुहि है जगमाता । सूर्य चंद्रमा ध्यावत नारद ऋषि गाता ॥ जय० ॥ १ ॥
दुर्गारूप निरंजनि सुखसंपतिदाता । जो कोई तुमकूं ध्यावत ऋधि सिधि धन पाता ॥ जय ल० ॥ २ ॥
तूही है पातालबसती तूही है शुभदाता । कर्मप्रभावप्रकाशक जगनिधिसे त्राता ॥ जय ल० ॥ ३ ॥
जिस घर थारो बासो जाहिमें गुण आता । कर न सकै सोई करले मन नहिं धड़काता ॥ जय ल०॥४॥
तुम विन यज्ञ न होवे वस्त्र न होय राता । खान पानको विभवै तुम बिन कुण दाता ॥ जय ल० ॥ ५ ॥
शुभगुणसुंदरयुक्ता क्षीरनिधी जाता । रत्न चतुर्दश तोकूं कोइ भी न पाता ॥ जय ल० ॥ ६ ॥
या आरति लक्ष्मीजीकी जो कोई नर गाता । उर आनंद अति उमँगे पाप उतर जाता ॥ जय ल० ॥ ७ ॥
स्थिरचर जगत बचावै कर्म प्रेर ल्याता । रामप्रताप मैयाकी शुभ दृष्टी चाता ।
जय लक्ष्मीमाता जय लक्ष्मीमाता । तुमको निशिदिन सेवत हर विष्णू धाता ॥ ८ ॥

इति श्रीलक्ष्मीजीकी आरती समाप्त ।

# अत्रेयमभ्यर्थना.

अत्रास्माकं मुद्रणालये ऋग्वेदादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादिमहापुराणानि धर्मशास्त्र-कर्मकाण्ड-व्याकरण-न्याय-योग-सांख्य-मीमांसादिशास्त्रीयग्रन्थाः । काव्यनाटकचम्पूप्रभृतयो ग्रन्थाः सहस्रनामाद्यनेकस्तोत्रग्रन्था विविधभाषाग्रन्याश्च सीसकोत्तममहदल्पाक्षरैर्मनोहरं मुद्रिता आसते योग्यमूल्येन विक्रय्याः सान्ति तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः ।

---

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :

**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,
पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५,
फैक्स -०२०-२६८७४९०७.

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डींग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१
दूरभाष/फैक्स- ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-२४२००७८

KHEMRAJ SHRIKRISHNADASS